# चम्पूरामायणे

# बालकाण्डम्

१४ – ०५.०३.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

# पुनरावर्तनम्

- एतेऽपि पावकाः – यज्ञक्रियाणां विध्वंसितत्वात् पाकमात्रार्थं प्रयुज्यमानाः अग्नयः
- स एष मानुषाद् – युद्धे रावणस्य पराक्रमः, मनुष्येतरैः अवध्यत्वरूपः वरः, लोकत्रयस्य पीडा, भगवतः तिरस्कारः

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# अथ भगवानाकर्ण्य गीर्वाणगणवाणीम्

- अथ, भगवान्, आकर्ण्य, गीर्वाण-गण-वाणीम्
- अथ – देवानां विज्ञापनानन्तरम्
- भगवान् – नारायणः
- आकर्ण्य – श्रुत्वा
- गीर्वाणगणवाणीम् – सुरसङ्घस्य वचनम्
- भगवान् नारायणः देवानां विज्ञापनं श्रुत्वा स्वयं वक्तुम् आरभते ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# इन्द्रनीलाचलोदञ्चच्चन्द्रिकाधवलस्मितः ।
# वाचमूचे सुधाधारां मधुरां मधुसूदनः ॥ २२ ॥

- इन्द्रनील-अचल-उदञ्चत्-चन्द्रिका-धवल-स्मितः, वाचम्, ऊचे, सुधा-धाराम्, मधुराम्, मधुसूदनः ।
- ऊचे = अब्रवीत्
- कः ऊचे? मधुसूदनः = विष्णुः

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# इन्द्रनीलाचलोदञ्चच्चन्द्रिकाधवलस्मितः ।
# वाचमूचे सुधाधारां मधुरां मधुसूदनः ॥ २२ ॥

- कीदृशः मधुसूदनः? इन्द्रनीला...स्मितः – इन्द्रनीलाचलः = मरकतशैलः, तत्र उदञ्चती = विलसन्ती, या चन्द्रिका = ज्योत्स्ना, तद्वत् धवलम् = शुभ्रम्, स्मितम् = हासः यस्य तादृशः ।
- किम् ऊचे? वाचम् = वाणीम्
- कीदृशीं वाचम्? सुधाधाराम् = अमृतस्यन्दिनीम्
- पुनः कीदृशीम्? मधुराम् = माधुर्ययुक्ताम्

# इन्द्रनीलाचलोदञ्चच्चन्द्रिकाधवलस्मितः ।
# वाचमूचे सुधाधारां मधुरां मधुसूदनः ॥ २२ ॥

- अन्वयः – इन्द्रनीलाचलोदञ्चच्चन्द्रिकाधवलस्मितः मधुसूदनः सुधाधारां मधुरां वाचम् ऊचे ।
- तात्पर्य्यम् – मरकतशैले विलसन्त्या ज्योत्स्नया सदृशेन मन्दहासेन युक्तः मरकतमणिनिभशरीरः विष्णुः अमृतस्यन्दिनीं मधुरां वाणीम् अब्रवीत् ।

# इन्द्रनीलाचलोदञ्चच्चन्द्रिकाधवलस्मितः ।
# वाचमूचे सुधाधारां मधुरां मधुसूदनः ॥ २२ ॥

- इन्द्र...स्मितः – इन्द्रनीलस्य अचलः, इन्द्रनीलाचले उदञ्चती चन्द्रिका, इन्द्र...चन्द्रिका इव धवलम्, इन्द्र....धवलं स्मितं यस्य सः । "अद्रि-गोत्र-गिरि-ग्रावा-अचल-शैल-शिलोच्चयाः", "चन्द्रिका कौमुदी ज्योत्स्ना" (अमरः)
- वाचम् – चकारान्तः, स्त्री, २.१
- ऊचे – "ब्रूञ् व्यक्तायां वाचि", लिट् लकारः, आत्मनेपदम्, प्रथम.१
- सुधाधाराम् – सुधायाः धारा, ताम्

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

## इन्द्रनीलाचलोदञ्चच्चन्द्रिकाधवलस्मितः ।
## वाचमूचे सुधाधारां मधुरां मधुसूदनः ॥ २२ ॥

- मधुराम् – "स्वादु-प्रियौ च मधुरौ" (अमरः)
- मधुसूदनः – मधोः सूदनः । शब्देनानेन दैत्यनाशकत्वं व्यज्यते ।
- उपमालङ्कारः ।
- अनुष्टुप् छन्दः ।

# भवतामपराधविधायिनस्तस्य यातुधानस्य निधनमधुनैव विधातुं शक्यम् ।

- भवताम्, अपराध-विधायिनः, तस्य, यातुधानस्य, निधनम्, अधुना, एव, विधातुम्, शक्यम्
- भवताम् = युष्माकम्
- अपराधविधायिनः = अन्याय्यम् आचरतः
- तस्य यातुधानस्य = राक्षसस्य

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# भवतामपराधविधायिनस्तस्य यातुधानस्य निधनमधुनैव विधातुं शक्यम् ।

- निधनम् = वधः
- अधुनैव = इदानीमेव
- विधातुम् = कर्तुम्
- शक्यम्

# भवतामपराधविधायिनस्तस्य यातुधानस्य निधनमधुनैव विधातुं शक्यम् ।

- तात्पर्य्यम् – युष्मान् अन्याय्येन पीडयन्तं तं राक्षसं झटिति मारयितुं शक्यते ।
- अपराधविधायिनः – अपराधं विधातुं शीलं यस्य सः, वि-धा + ताच्छील्ये णिनिः (कृत्), नकारान्तः, पुं, ६.१
- यातुधानस्य – "यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी" (अमरः)
- निधनम् – "अन्तो नाशो द्वयोर्मृत्युः मरणं निधनोऽस्त्रियाम्" (अमरः)

किन्तु सरसिजासनशासनमप्यमोघीकुर्वन्नुर्वीतले पुत्रीयतः सुत्राममित्रस्य दशरथस्य मनोरथमपि पूरयितुमादृतमानुषवेषः सन्नहमेव तं हनिष्यामीति व्याहृत्यान्तरधात् ।

- किन्तु, सरसिज-आसन-शासनम्, अपि, अमोघीकुर्वन्, उर्वी-तले, पुत्रीयतः, सुत्राम-मित्रस्य, दशरथस्य, मनोरथम्, अपि, पूरयितुम्, आदृत-मानुष-वेषः, सन्, अहम्, एव, तम्, हनिष्यामि, इति व्याहृत्य, अन्तर्-अधात् ।

vyoma
Samskritam · Value · Education · Technology

किन्तु सरसिजासनशासनमप्यमोघीकुर्वन्नुर्वीतले पुत्रीयतः सुत्राममित्रस्य दशरथस्य मनोरथमपि पूरयितुमादृतमानुषवेषः सन्नहमेव तं हनिष्यामीति व्याहृत्यान्तरधात् ।

- किन्तु
- सरसिजासनशासनम् – सरसिजासनः = कमलासनः ब्रह्मा, तस्य शासनम् = आज्ञाम्, मनुष्येतरैः अवध्यत्वरूपं वरम्
- अपि

किन्तु सरसिजासनशासनमप्यमोघीकुर्वन्नुर्वीतले पुत्रीयतः सुत्राममित्रस्य दशरथस्य मनोरथमपि पूरयितुमादृतमानुषवेषः सन्नहमेव तं हनिष्यामीति व्याहृत्यान्तरधात् ।

- अमोघीकुर्वन् – सत्यं विधास्यन्
- उर्वीतले = भूलोके
- पुत्रीयतः = सुतार्थिनः
- सुत्राममित्रस्य = इन्द्रसखस्य

किन्तु सरसिजासनशासनमप्यमोघीकुर्वन्नुर्वीतले पुत्रीयतः सुत्राममित्रस्य दशरथस्य मनोरथमपि पूरयितुमादृतमानुषवेषः सन्नहमेव तं हनिष्यामीति व्याहृत्यान्तरधात् ।

- दशरथस्य
- मनोरथम् = इच्छाम्
- अपि
- पूरयितुम् = सफलीकर्तुम्

किन्तु सरसिजासनशासनमप्यमोघीकुर्वन्नुर्वीतले पुत्रीयतः सुत्रामममित्रस्य दशरथस्य मनोरथमपि पूरयितुमादृतमानुषवेषः सन्नहमेव तं हनिष्यामीति व्याहृत्यान्तरधात् ।

- आदृतमानुषवेषः सन् = गृहीतमानवाकारः भूत्वा
- अहमेव
- तं = रावणम्
- हनिष्यामि = व्यापादयिष्यामि

किन्तु सरसिजासनशासनमप्यमोघीकुर्वन्नुर्वीतले पुत्रीयतः सुत्राममित्रस्य दशरथस्य मनोरथमपि पूरयितुमादृतमानुषवेषः सन्नहमेव तं हनिष्यामीति व्याहृत्यान्तरधात् ।

- इति = एवम्
- व्याहृत्य = उक्त्वा
- अन्तरधात् = तिरोहितः

किन्तु सरसिजासनशासनमप्यमोघीकुर्वन्नुर्वीतले पुत्रीयतः सुत्राममित्रस्य दशरथस्य मनोरथमपि पूरयितुमादृतमानुषवेषः सन्नहमेव तं हनिष्यामीति व्याहृत्यान्तरधात् ।

- तात्पर्य्यम् – “(अधुनैव रावणः हन्तुं शक्यः), किन्तु ब्रह्मणः वरं सत्यापयितुम्, तथैव भूलोके सुतार्थिनः इन्द्रसखस्य दशरथस्य इच्छां पूरयितुं च अहमेव मानवाकारं गृहीत्वा तं रावणं व्यापादयिष्यामि” इत्युक्त्वा भगवान् नारायणः अदृश्यः अभूत् ।

किन्तु सरसिजासनशासनमप्यमोघीकुर्वन्नुर्वीतले पुत्रीयतः सुत्राममित्रस्य दशरथस्य मनोरथमपि पूरयितुमादृतमानुषवेषः सन्नहमेव तं हनिष्यामीति व्याहृत्यान्तरधात् ।

- सरसिजासनशासनम् – सरसि जायते, सरसिजम् आसनं यस्य सः, सरसिजासनस्य शासनम्
- अमोघीकुर्वन् – न मोघः अमोघः, अनमोघम् अमोघं कुर्वन् । अभूततद्भावे च्विः ।

किन्तु सरसिजासनशासनमप्यमोघीकुर्वन्नुर्वीतले पुत्रीयतः सुत्राममित्रस्य दशरथस्य मनोरथमपि पूरयितुमादृतमानुषवेषः सन्नहमेव तं हनिष्यामीति व्याहृत्यान्तरधात् ।

- उर्वीतले – उर्व्याः तलम्, तस्मिन् । “सर्वंसहा वसुमती वसुधा-उर्वी-वसुन्धरा” (अमरः)
- पुत्रीयतः – पुत्रम् आत्मनः इच्छति – नामधातुः । पुत्र + क्यच् (“सुप आत्मनः क्यच्” ३.१.८) । “सनाद्यन्ता धातवः” (३.१.३२) । पुत्रीय + शतृ । तकारान्तः, पुं, ६.१ ।

किन्तु सरसिजासनशासनमप्यमोघीकुर्वन्नुर्वीतले पुत्रीयतः सुत्राममित्रस्य दशरथस्य मनोरथमपि पूरयितुमादृतमानुषवेषः सन्नहमेव तं हनिष्यामीति व्याहृत्यान्तरधात् ।

- सुत्राममित्रस्य – सुत्राम्णः मित्रम्, तस्य । “सुत्रामा गोत्रभिद् वज्री” (अमरः)
- आदृतमानुषवेषः – मानुषस्य वेषः, आदृतः मानुषवेषः येन सः
- कुर्वन् + उर्वीतले = कुर्वन्नुर्वीतले, सन् + अहमेव = सन्नहमेव – ङमुडागमसन्धिः
- हनिष्यामि – “हन हिंसागत्योः” – लृट्, उत्तम.१

किन्तु सरसिजासनशासनमप्यमोघीकुर्वन्नुर्वीतले पुत्रीयतः सुत्रामममित्रस्य दशरथस्य मनोरथमपि पूरयितुमादृतमानुषवेषः सन्नहमेव तं हनिष्यामीति व्याहृत्यान्तरधात् ।

- व्याहृत्य – वि-आ-हृञ् हरणे + ल्यप्
- अन्तर्-अधात् – अन्तर्+ डुधाञ् धारणपोषणयोः, लुङ्, १.१

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

# ततः सा परिषदनिमिषाणामुन्मिषितहर्षा हृषीकेशादेशात्प्रशमितदुर्दशानि निर्दशाननानि चतुर्दशभुवनानि बुद्ध्वा दुग्धसागरान्निरगात् ।

- ततः, सा, परिषद्, अनिमिषाणाम्, उन्मिषित-हर्षा, हृषीकेश-आदेशात्, प्रशमित-दुर्दशानि, निर्दशाननानि, चतुर्दश-भुवनानि, बुद्ध्वा, दुग्ध-सागरात्, निरगात्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

ततः सा परिषदनिमिषाणामुन्मिषितहर्षा हृषीकेशादेशात् प्रशमितदुर्दशानि निर्दशाननानि चतुर्दशभुवनानि बुद्ध्वा दुग्धसागरान्निरगात् ।

- ततः = विष्णोः अन्तर्धानानन्तरम्
- सा = पूर्वोक्ता
- अनिमिषाणां परिषद् = देवसंसत्
- उन्मिषितहर्षा = समुत्पन्नानन्दा
- हृषीकेशादेशात् = नारायणस्य आज्ञया

ततः सा परिषदनिमिषाणामुन्मिषितहर्षा हृषीकेशादेशात् प्रशमितदुर्दशानि निर्दशाननानि चतुर्दशभुवनानि बुद्ध्वा दुग्धसागरान्निरगात् ।

- प्रशमितदुर्दशानि = निवारित-दुरवस्थानि
- निर्दशाननानि = रावणमुक्तानि
- चतुर्दशभुवनानि = भूरादीन् चतुर्दशसङ्ख्यकान् लोकान्
- बुद्ध्वा = ज्ञात्वा
- दुग्धसागरात् = क्षीरसमुद्रात्
- निरगात् = प्रातिष्ठत

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam - Value Education - Technology

ततः सा परिषदनिमिषाणामुन्मिषितहर्षा हृषीकेशादेशात् प्रशमितदुर्दशानि निर्दशाननानि चतुर्दशभुवनानि बुद्ध्वा दुग्धसागरान्निरगात् ।

- तात्पर्य्यम् – विष्णोः वचनं श्रुत्वा देवसमूहः अत्यन्तं सन्तुष्टः, अचिरादेव भगवतः आज्ञया सर्वे लोकाः निवारितदुरवस्थाः रावणमुक्ताः भविष्यन्ति इति ज्ञात्वा क्षीरसमुद्रात् प्रातिष्ठत ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

ततः सा परिषदनिमिषाणामुन्मिषितहर्षा हृषीकेशादेशात् प्रशमितदुर्दशानि निर्दशाननानि चतुर्दशभुवनानि बुद्ध्वा दुग्धसागरान्निरगात् ।

- अनिमिषाणाम् – न निमिषन्ति इति अनिमिषाः । “सुर-मत्स्यौ अनिमिषौ” (अमरः)
- उन्मिषितहर्षा – उन्मिषितः हर्षः यस्याः सा
- प्रशमितदुर्दशानि – प्रशमिता दुर्दशा येषां तानि
- निर्दशाननानि – निर्गतः दशाननः येभ्यः तानि

ततः सा परिषदनिमिषाणामुन्मिषितहर्षा हृषीकेशादेशात् प्रशमितदुर्दशानि निर्दशाननानि चतुर्दशभुवनानि बुद्ध्वा दुग्धसागरान्निरगात् ।

- चतुर्दशभुवनानि – भूः, भुवः, सुवः, महः, जनः, तपः, सत्यम् । अतलम्, वितलम्, सुतलम्, तलातलम्, महातलम्, रसातलम्, पातालम् ।
- दुग्धसागरात् – दुग्धस्य सागरः, तस्मात् । "दुग्धं क्षीरं पयः समम्" (अमरः)
- निरगात् – निर् +"इण् गतौ" – लुङ्, प्रथम.१ । "इणो गा लुङि" (२.४.४५)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# सङ्क्षेपः

- अथ भगवान् – देवानां विज्ञापनं श्रुत्वा
- इन्द्रनीलाचलोदञ्चत्... – विष्णुः मन्दहासयुक्तः मधुरम् अभाषत
- भवताम् अपराध... – लोकपीडकोऽसौ रावणः अधुनैव हन्तुं शक्यः
- किन्तु सरसिजासनशासनम्.. – ब्रह्मणः वचनं सत्यापयितुं, दशरथस्य इच्छां पूरयितुं च अहं मानुषरूपेण जातः सन् रावणं हनिष्यामि
- ततः सा परिषद्... – हृष्टाः देवाः क्षीरसमुद्रात् निष्क्रान्ताः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in